कणाद्धि रोदसी चास्य यावत्कीर्तिस्तरस्विनी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ २८ ॥
ताम्राय कांस्यरीतीनां त्रपुण सीसकस्य च ।
त्रिगुणा तिष्ठतो वृद्धि· कालाच्चिरकृतस्य तु ॥ २९ ॥
दन्तचर्मास्थिशृङ्गाणां मृन्मयानां तथैव च ।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च ॥ ३० ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ ३१ ॥
ज्येष्ठस्याशोधिको देय कनिष्ठस्य वर स्मृत ।
समांशभाज शेषा स्युरप्रत्ता भगिनी तथा ॥ ३२ ॥
भ्रातृणामविभक्तानां यद्युत्थानं भवेत्सह ।
न तत्र विषमं भागं पिता दद्यात्कथं च न ॥ ३३ ॥

---

28 Ap. Vaij. Kam
29 Vīr. 299 ; Ap
30 Vīr. 300 , Ap. Vaij
31 Vīr 644 , Ap Vaij
32 Vīr 561 , Vaij Kam
33 Vīr. 562 , Ap. Sm.

# INDEX TO THE VEDIC MANTRAS

*Quoted in Vasishtha's Dharmasāstra*

[ This Index does not include short sacrificial formulas and invocations, and those mantras which are quoted by their names only, such as *e. g* Aghamarshana, Devakrta, &c. See the references in Prof. Buhler's translation ]